## (१२) द्वादशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य शौनक ऋषिः । सरस्वती देवता । त्रिष्टुप् छन्दः

यस्ते पृथु स्तनयित्नुर्य ऋष्वो दैवः केतुर्विश्वमाभूषतीदम् ।
मा नो वधीर्विद्युता देव सस्यं मोत वधी रश्मिभिः सूर्यस्य ॥१॥

## (१३) त्रयोदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शौनक ऋषिः । (१) प्रथमर्चः सभासमिती पितरो वा (२) द्वितीयायाः सभा (३) तृतीयाया इन्द्रः (४) चतुर्थ्याश्च मन्त्रोक्ता देवताः । (१) प्रथमाया भुरिक्त्रिष्टुप् (२-४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी

सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने ।
येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः संगतेषु ॥१॥

विद्म ते सभे नाम नरिष्टा नाम वा असि ।
ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥२॥

एषामहं समासीनानां वर्चो विज्ञानमा ददे ।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥३॥

यद्वो मनः परागतं यद्बद्धमिह वेह वा ।
तद्व आ वर्तयामसि मयि वो रमतां मनः ॥४॥

## (१४) चतुर्दशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । सूर्यो देवता । अनुष्टुप् छन्दः

यथा सूर्यो नक्षत्राणामुद्यंस्तेजांस्याददे ।
एवा स्त्रीणां च पुंसां च द्विषतां वर्च आ ददे ॥१॥

यावन्तो मा सपत्नानामायन्तं प्रतिपश्यथ ।
उद्यन्त्सूर्य इव सुप्तानां द्विषतां वर्च आ ददे ॥२॥

## (१५) पञ्चदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । सविता देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप् (३) तृतीयायास्त्रिष्टुप् (४) चतुर्थ्याश्च जगती छन्दांसि

अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।
अर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ॥१॥

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतुः कृपात्स्वः ॥२॥

सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितर्वार्याणि दिवोदिव आ सुवा भूरि पश्वः ॥३॥

दमूना देवः सविता वरेण्यो दधद्रत्नं दक्षं पितृभ्य आयूंषि ।
पिबात्सोमं ममददेनमिष्टे परिज्मा चित्क्रमते अस्य धर्मणि ॥४॥

## (१६) षोडशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता देवता । त्रिष्टुप् छन्दः

तां सवितः सत्यसवां सुचित्रामाहं वृणे सुमतिं विश्ववाराम् ।
यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां महिषो भगाय ॥१॥

## (१७) सप्तदशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता देवता । त्रिष्टुप् छन्दः

बृहस्पते सवितर्वर्धयैनं ज्योतयैनं महते सौभगाय ।
संशितं चित्संतरं सं शिशाधि विश्व एनमनु मदन्तु देवाः ॥१॥

## (१८) अष्टादशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता मन्त्रोक्ता वा देवता ।
(१) प्रथमर्चस्त्रिपदार्षी गायत्री (२) द्वितीयाया अनुष्टुप्
(३-४) तृतीयाचतुर्थ्योश्च त्रिष्टुप् छन्दांसि

धाता दधातु नो रयिमीशानो जगतस्पतिः ।
स नः पूर्णेन यच्छतु ॥१॥

धाता दधातु दाशुषे प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिं विश्वराधसः ॥२॥

धाता विश्वा वार्या दधातु प्रजाकामाय दाशुषे दुरोणे ।
तस्मै देवा अमृतं सं व्ययन्तु विश्वे देवा अदितिः सजोषाः ॥३॥

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधातु ॥४॥

## (१९) एकोनविंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । पर्जन्यः पृथिवी वा देवता ।
(१) प्रथमर्चश्चतुष्पदा भुरिगुष्णिक् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

प्र नभस्व पृथिवि भिन्द्धी३दं दिव्यं नभः ।
उद्नो दिव्यस्य नो धातरीशानो वि ष्या दृतिम् ॥१॥

न घ्रंस्तताप न हिमो जघान प्र नभतां पृथिवी जीरदानुः ।
आपश्चिदस्मै घृतमित्क्षरन्ति यत्र सोमः सदमित्तत्र भद्रम् ॥२॥

## (२०) विंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवता । जगती छन्दः

प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः ।
संजानानाः संमनसः सयोनयो मयि पुष्टं पुष्टपतिर्दधातु ॥१॥

## (२१) एकविंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । अनुमतिर्देवता ।
(१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप् (३) तृतीयायास्त्रिष्टुप् (४) चतुर्थ्या भुरिगनुष्टुप्
(५) पञ्चम्या जगती (६) षष्ठ्याश्चातिशाक्वरगर्भा जगती छन्दांसि

अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतां दाशुषे मम ॥१॥

अन्विदनुमते त्वं मंससे शं च नस्कृधि ।
जुषस्व हव्यमाहुतं प्रजां देवि ररास्व नः ॥२॥

अनु मन्यतामनुमन्यमानः प्रजावन्तं रयिमक्षीयमाणम् ।
तस्य वयं हेडसि मापि भूम सुमृडीके अस्य सुमतौ स्याम ॥३॥

यत्ते नाम सुहवं सुप्रणीतेऽनुमते अनुमतं सुदानु ।
तेना नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ॥४॥

एमं यज्ञमनुमतिर्जगाम सुक्षेत्रतायै सुवीरतायै सुजातम् ।
भद्रा ह्यस्याः प्रमतिर्बभूव सेमं यज्ञमवतु देवगोपा ॥५॥

अनुमतिः सर्वमिदं बभूव यत्तिष्ठति चरति यदु च विश्वमेजति ।
तस्यास्ते देवि सुमतौ स्यामानुमते अनु हि मंससे नः ॥६॥

## (२२) द्वाविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आत्मा देवता ।
पराशक्वरी विराड्गर्भा जगती छन्दः

समेत विश्वे वचसा पतिं दिव एको विभूरतिथिर्जनानाम् ।
स पूर्व्यो नूतनमाविवासत्तं वर्तनिरनु वावृत एकमित्पुरु ॥१॥

## (२३) त्रयोविंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवता । (१) प्रथमर्चो
द्विपदैकावसाना विराड्गायत्री (२) द्वितीयायाश्च त्रिपदानुष्टुप् छन्दसी

अयं सहस्रमा नो दृशे कवीनां मतिर्ज्योतिर्विधर्मणि ॥१॥

ब्रध्नः समीचीरुषसः समैरयन् ।
अरेपसः सचेतसः स्वसरे मन्युमत्तमाश्चिते गोः ॥२॥

## (२४) चतुर्विंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः

दौष्वंप्न्यं दौर्जीवित्यं रक्षो अभ्वमराय्यः ।
दुर्णाम्नीः सर्वा दुर्वाचस्ता अस्मन्नाशयामसि ॥१॥

## (२५) पञ्चविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । सविता देवता । त्रिष्टुप् छन्दः

यन्न इन्द्रो अखनद्यदग्निर्विश्वे देवा मरुतो यत्स्वर्काः ।
तदस्मभ्यं सविता सत्यधर्मा प्रजापतिरनुमतिर्नि यच्छात् ॥१॥

## (२६) षड्विंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । विष्णुर्देवता । त्रिष्टुप् छन्दः

ययोरोजसा स्कभिता रजांसि यौ वीर्यैर्वीरतमा शविष्ठा ।
यौ पत्येते अप्रतीतौ सहोभिर्विष्णुमगन्वरुणं पूर्वहूतिः ॥१॥

यस्येदं प्रदिशि यद्विरोचते प्र चानति वि च चष्टे शचीभिः ।
पुरा देवस्य धर्मणा सहोभिर्विष्णुमगन्वरुणं पूर्वहूतिः ॥२॥

## (२७) सप्तविंशं सूक्तम्

(१-८) अष्टार्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । विष्णुर्देवता ।
(१, ८) प्रथमाष्टम्योर्ऋचोस्त्रिष्टुप् (२) द्वितीयायास्त्रिपदा विराड्गायत्री
(३) तृतीयायास्त्र्यवसाना षट्पदा विराट् शक्वरी
(४-७) चतुर्थ्यादिचतसृणाञ्च गायत्री छन्दांसि

विष्णोर्नु कं प्रा वोचं वीर्याणि यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥

प्र तद्विष्णु स्तवते वीर्याणि मृगो न भीमः कुचरो गिरिष्ठाः ।
परावत आ जगम्यात्परस्याः ॥२॥

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।
उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि ।

घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥३॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदा ।
समूढमस्य पांसुरे ॥४॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
इतो धर्माणि धारयन् ॥५॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥६॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥७॥

दिवो विष्ण उत वा पृथिव्या महो विष्ण उरोरन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात् ॥८॥

## (२८) अष्टाविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । इडा देवता । त्रिष्टुप् छन्दः

इडैवास्माँ अनु वस्तां व्रतेन यस्याः पदे पुनते देवयन्तः ।
घृतपदी शक्वरी सोमपृष्ठोप यज्ञमस्थित वैश्वदेवी ॥१॥

## (२९) एकोनत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । वेदो देवता । त्रिष्टुप् छन्दः

वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशुर्वेदिः परशुर्नः स्वस्ति ।
हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमं जुषन्ताम् ॥१॥

## (३०) त्रिंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । मन्त्रोक्ता देवता । त्रिष्टुप् छन्दः

अग्नाविष्णू महि तद्वां महित्वं पाथो घृतस्य गुह्यस्य नाम ।

दमेदमे सुप्त रत्ना दधानौ प्रति वां जिह्वा घृतमा चरण्यात् ॥१॥

अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणौ ।
दमेदमे सुष्टुत्या वावृधानौ प्रति वां जिह्वा घृतमुच्चरण्यात् ॥२॥

## (३१) एकत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । द्यावापृथिव्यौ मन्त्रोक्ता वा देवताः । बृहती छन्दः

स्वाक्तं मे द्यावापृथिवी स्वाक्तं मित्रो अकरयम् ।
स्वाक्तं मे ब्रह्मणस्पतिः स्वाक्तं सविता करत् ॥१॥

## (३२) द्वात्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । इन्द्रो देवता । भुरिक्त्रिष्टुप् छन्दः

इन्द्रोतिभिर्बहुलाभिर्नो अद्य यावच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।
यो नो द्वेष्टयधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥१॥

## (३३) त्रयस्त्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता । अनुष्टुप् छन्दः

उप प्रियं पनिप्नतं युवानमाहुतीवृधम् ।
अगन्म बिभ्रतो नमो दीर्घमायुः कृणोतु मे ॥१॥

## (३४) चतुस्त्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मरुदादयो देवताः । पथ्यापङ्क्तिश्छन्दः

सं मा सिञ्चन्तु मरुतः सं पूष सं बृहस्पतिः ।
सं मायमग्निः सिञ्चतु प्रजया च धनेन च दीर्घमायुः कृणोतु मे ॥१॥

## (३५) पञ्चत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । जातवेदा देवता । जगती छन्दः

अग्ने जातान्प्र णुदा मे सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधस्पदं कृणुष्व ये पृतन्यवोऽनागसस्ते वयमदितये स्याम ॥१॥

## (३६) षड्विंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । जातवेदा देवता ।
(१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप् (३) तृतीयायाश्च त्रिष्टुप् छन्दसी

प्रान्यान्त्सपत्नान्त्सहसा सहस्व प्रत्यजाताञ्जातवेदो नुदस्व ।
इदं राष्ट्रं पिपृहि सौभगाय विश्व एनमनु मदन्तु देवाः ॥१॥

इमा यास्ते शतं हिराः सहस्रं धमनीरुत ।
तासां ते सर्वासामहमश्मना बिलमप्यधाम् ॥२॥

परं योनेरवरं ते कृणोमि मा त्वा प्रजाभि भून्मोत सूनुः ।
अस्वं१ त्वाप्रजसं कृणोम्यश्मानं ते अपिधानं कृणोमि ॥३॥

## (३७) सप्तत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अक्षि देवता । अनुष्टुप् छन्दः

अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम् ।
अन्तः कृष्णुष्व मां हृदि मन इन्नौ सहासति ॥१॥

## (३८) अष्टात्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः

अभि त्वा मनुजातेन दधामि मम वाससा ।
यथाऽसो मम केवलो नान्यासां कीर्तयाश्चन ॥१॥

## (३९) एकोनचत्वारिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आसुरीवनस्पतिर्देवता । (१-२, ४-५) प्रथमाद्वितीयाचतुर्थीपञ्चमीनामृचामनुष्टुप् (३) तृतीयायाश्च चतुष्पदोष्णिक् छन्दसी

इदं खनामि भेषजं मांपश्यमभिरोरुदम् ।
परायतो निवर्तनमायतः प्रतिनन्दनम् ॥१॥

येना निचक्र आसुरीन्द्रं देवेभ्यस्परि ।
तेना नि कुर्वे त्वामहं यथा तेऽसानि सुप्रिया ॥२॥

प्रतीची सोममसि प्रतीच्युत सूर्यम् ।
प्रतीची विश्वान्देवान्तां त्वाच्छावदामसि ॥३॥

अहं वदामि नेत्त्वं सभायामह त्वं वद ।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन ॥४॥

यदि वासि तिरोजनं यदि वा नद्य स्तिरः ।
इयं ह मह्यं त्वामोषधिर्बद्ध्वेव न्यानयत् ॥५॥

## (४०) चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः

दिव्यं सुपर्णं पयसं बृहन्तमपां गर्भं वृषभमोषधीनाम् ।
अभीपतो वृष्ट्या तर्पयन्तमा नो गोष्ठे रयिष्ठां स्थापयाति ॥१॥

## (४१) एकचत्वारिंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । सरस्वान् देवता ।
(१) प्रथमर्चो भुरिक्त्रिष्टुप् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रत उपतिष्ठन्त आपः ।
यस्य व्रते पुष्टपतिर्निविष्टस्तं सरस्वन्तमवसे हवामहे ॥१॥

आ प्रत्यञ्चं दाशुषे दाश्वंसं सरस्वन्तं पुष्टपतिं रयिष्ठाम् ।
रायस्पोषं श्रवस्युं वसाना इह हुवेम सदनं रयीणाम् ॥२॥

## (४२) द्विचत्वारिंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । श्येनो देवता ।
(१) प्रथमर्चो जगती (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

अति धन्वान्यत्यपस्ततर्द श्येनो नृचक्षा अवसानदर्शः ।
तरन्विश्वान्यवरा रजांसीन्द्रेण सख्या शिव आ जगम्यात् ॥१॥

श्येनो नृचक्षा दिव्यः सुपर्णः सहस्रपाच्छतयोनिर्वयोधाः ।
स नो नि यच्छाद्वसु यत्पराभृतमस्माकमस्तु पितृषु स्वधावत् ॥२॥

## (४३) त्रिचत्वारिंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य प्रस्कराव ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः
सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ॥१॥

सोमारुद्रा युवमेतान्यस्मद्विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो असत्तनूषु बद्धं कृतमेनो अस्मत् ॥२॥

## (४४) चतुश्चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कराव ऋषिः । वाग्देवता । त्रिष्टुप् छन्दः
शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः ।
तिस्रो वाचो निहिता अन्तरस्मिन्तासामेका वि पपातानु घोषम् ॥१॥

## (४५) पञ्चचत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कराव ऋषिः । मन्त्रोक्ता देवताः । भुरिक्त्रिष्टुप् छन्दः
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनयोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥१॥

## (४६) षट्चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कराव ऋषिः । भेषजं देवता । अनुष्टुप् छन्दः
जनाद्विश्वजनीनात्सिन्धुतस्पर्याभृतम् ।
दूरात्त्वा मन्य उद्भृतमीर्ष्याया नाम भेषजम् ॥१॥

## (४७) सप्तचत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कराव ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः
अग्नेरिवास्य दहतो दावस्य दहतः पृथक् ।
एतामेतस्येर्ष्यामुद्राग्निमिव शमय ॥१॥

## (४८) अष्टचत्वारिंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप् (३) तृतीयायाश्च त्रिष्टुप् छन्दसी

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥१॥

या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥२॥

या विश्पत्नीन्द्रमसि प्रतीची सहस्रस्तुकाभियन्ती देवी ।
विष्णोः पत्नि तुभ्यं राता हवींषि पतिं देवि राधसे चोदयस्व ॥३॥

## (४९) एकोनपञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चो जगती (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

कुहूं देवीं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवा जोहवीमि ।
सा नो रयिं विश्ववारं नि यच्छाद्ददातु वीरं शतदायमुक्थ्यम् ॥१॥

कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषो जुषेत ।
शृणोतु यज्ञमुशती नो अद्य रायस्पोषं चिकितुषी दधातु ॥२॥

## (५०) पञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । जगती छन्दः

राकामहं सुहवा सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥१॥

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रापोषं सुभगे रराणा ॥२॥

## (५१) एकपञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । देवपत्न्यो देवताः ।
(१) प्रथमर्च आर्षी जगती (२) द्वितीयायाश्च चतुष्पदा पङ्क्तिश्छन्दसी
देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छन्तु ॥१॥

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥२॥

## (५२) द्विपञ्चाशं सूक्तम्

(१-९) नवर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । इन्द्रो देवता । (१-२, ५, ८-९)
प्रथमाद्वितीयापञ्चम्यष्टमीनवमीनामृचामनुष्टुप् (३, ७) तृतीयासप्तम्योस्त्रिष्टुप्
(४) चतुर्थ्या जगती (६) षष्ठ्याश्च भुरिक्त्रिष्टुप् छन्दांसि
यथा वृक्षमशनिर्विश्वाहा हन्त्यप्रति ।
एवाहमद्य कितवानक्षैर्बध्यासमप्रति ॥१॥

तुराणामतुराणां विशामवर्जुषीणाम् ।
समैतु विश्वतो भगो अन्तर्हस्तं कृतं मम ॥२॥

ईडे अग्निं स्वावसुं नमोभिरिह प्रसक्तो वि चयत्कृतं नः ।
रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणं मरुतां स्तोममृध्याम् ॥३॥

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरीयः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥४॥

अजैषं त्वा संलिखितमजैषमुत संरुधम् ।
अविं वृको यथा मथदेवा मथ्नामि ते कृतम् ॥५॥

उत प्रहामतिदीवा जयति कृतमिव श्वघ्नी वि चिनोति काले ।
यो देवकामो न धनं रुणद्धि समित्तं रायः सृजति स्वधाभिः ॥६॥

गोभिष्टरेमामतिं दुरेवां यवेन वा क्षुधं पुरुहूत विश्वे ।
वयं राजसु प्रथमा धनान्यरिष्टासो वृजनीभिर्जयेम ॥७॥

कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।
गोजिद्भूयासमश्वजिद्धनंजयो हिरण्यजित् ॥८॥

अक्षाः फलवतीं द्युवं दत्त गां क्षीरिणीमिव ।
सं मा कृतस्य धारया धनुः स्नाव्नेव नह्यत ॥९॥

## (५३) त्रिपञ्चाशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । इन्द्राबृहस्पती देवते । त्रिष्टुप् छन्दः

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः कृणोतु ॥१॥

## (५४) चतुष्पञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । सांमनस्यमश्विनौ च देवताः ।
(१) प्रथमर्चः ककुम्मत्यनुष्टुप् (२) द्वितीयायाश्च जगती छन्दसी

संज्ञानं नः स्वेभिः संज्ञानमरणेभिः ।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् ॥१॥

सं जानामहै मनसा सं चिकित्वा मा युष्महि मनसा दैव्येन ।
मा घोषा उत्स्थुर्बहुले विनिर्हते मेषुः पप्तदिन्द्रस्याहन्यागते ॥२॥

## (५५) पञ्चपञ्चाशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुः, बृहस्पत्यश्विनो वा देवताः ।
(१-२) प्रथमाद्वितीययोर्ऋचोस्त्रिष्टुप् (३) तृतीयाया भुरिक्त्रिष्टुप्
(४) चतुर्थ्या उष्णिग्गर्भार्षी पङ्क्तिः (५-७) पञ्चम्यादितृचस्य चानुष्टुप् छन्दांसि

अमुत्रभूयादधि यद्यमस्य बृहस्पतेरभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्मद्देवानामग्ने भिषजा शचीभिः ॥१॥

सं क्रामतं मा जहीतं शरीरं प्राणापानौ ते सयुजाविह स्ताम् ।
शतं जीव शरदो वर्धमानोऽग्निष्टे गोपा अधिपा वसिष्ठः ॥२॥

आयुर्यत्ते अतिहितं पराचैरपानः प्राणः पुनरा ताविताम् ।
अग्निष्टदाहार्निर्ऋतेरुपस्थात्तदात्मनि पुनरा वेशयामि ते ॥३॥

मेमं प्राणो हासीन्मो अपानोऽवहाय परा गात् ।
सप्तर्षिभ्य एनं परि ददामि ते एनं स्वस्ति जरसे वहन्तु ॥४॥

प्र विशतं प्राणापानावनड्वाहाविव व्रजम् ।
अयं जरिम्णः शेवधिररिष्ट इह वर्धताम् ॥५॥

आ ते प्राणं सुवामसि परा यक्ष्मं सुवामि ते ।
आयुर्नो विश्वतो दधदयमग्निर्वरेण्यः ॥६॥

उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥७॥

## (५६) षट्पञ्चाशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ऋक्सामनी देवते । अनुष्टुप् छन्दः

ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते ।
एते सदसि राजतो यज्ञं देवेषु यच्छतः ॥१॥

## (५७) सप्तपञ्चाशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य भृगुर्ऋषिः । इन्द्रो देवता । (१) प्रथमर्चोऽनुष्टुप्
(२) द्वितीयायाश्च विराट्परोष्णिक् छन्दसी

ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम् ।
एष मा तस्मान्मा हिंसीद्वेदः पृष्टः शचीपते ॥१॥

ये ते पन्थानोऽव दिवो येभिर्विश्वमैरयः ।

तेभिः सुम्नया धेहि नो वसो ॥२॥

## (५८) अष्टपञ्चाशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । (१, ३-८) प्रथमर्चः पादत्रयस्य तृतीयादिषण्णाञ्च मन्त्रोक्ता वृश्चिकादयो ब्रह्मणस्पतिर्वा (१, २) प्रथमायास्तुरीयपादस्य द्वितीयायाश्च वनस्पतिर्देवता । (१-३, ५-८) प्रथमादितृचस्य पञ्चम्यादिचतसृणाञ्चानुष्टुप् (४) चतुर्थ्याश्च विराट् प्रस्तारपङ्क्तिश्छन्दसी

तिरश्चिराजेरसितात्पृदाकोः परि संभृतम् ।
तत्कङ्कपर्वणो विषमियं वीरुदनीनशत् ॥१॥

इयं वीरुन्मधुजाता मधुश्चुन्मधुला मधूः ।
सा विह्रुतस्य भेषज्यथो मशकजम्भनी ॥२॥

यतो दष्टं यतो धीतं ततस्ते निर्ह्वयामसि ।
अर्भस्य तृप्रदंशिनो मशकस्यारसं विषम् ॥३॥

अयं यो वक्रो विपरुर्व्यङ्गो मुखानि वक्रा वृजिना कृणोषि ।
तानि त्वं ब्रह्मणस्पते इषीकामिव सं नमः ॥४॥

अरसस्य शर्कोटस्य नीचीनस्योपसर्पतः ।
विषं ह्यस्यादिष्यथो एनमजीजभम् ॥५॥

न ते बाह्वोर्बलमस्ति न शीर्षे नोत मध्यतः ।
अथ किं पापयाऽमुया पुच्छे बिभर्ष्यर्भकम् ॥६॥

अदन्ति त्वा पिपीलिका वि वृश्चन्ति मयूर्यः ।
सर्वे भल ब्रवाथ शार्कोटमरसं विषम् ॥७॥

य उभाभ्यां प्रहरसि पुच्छेन चास्येन च ।
आस्ये न ते विषं किमु ते पुच्छधावसत् ॥८॥

## (५९) एकोनषष्टितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य वामदेव ऋषिः । सरस्वती देवता । जगती छन्दः

यदाशसा वदतो मे विचुक्षुभे यद्याचमानस्य चरतो जनाँ अनु ।
यदात्मनि तन्वो मे विरिष्टं सरस्वती तदा पृणद्घृतेन ॥१॥

सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवृतन्नृतानि ।
उभे इदस्योभे अस्य राजत उभे यतेते उभे अस्य पुष्यतः ॥२॥

## (६०) षष्टितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य कौरुपथिर्ऋषिः । मन्त्रोक्ता देवता ।
(१) प्रथमर्चो जगती (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रतौ ।
युवो रथो अध्वरो देववीतये प्रति स्वसरमुप यातु पीतये ॥१॥

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमासद्यास्मिन्बर्हिषि मादयेथाम् ॥२॥

## (६१) एकषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य बादरायणिर्ऋषिः । अरिनाशनं देवता । अनुष्टुप् छन्दः

यो नः शपादशपतः शपतो यश्च नः शपात् ।
वृक्ष इव विद्युता हत आ मूलादनु शुष्यतु ॥१॥

## (६२) द्विषष्टितमं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । रम्यगृहा वास्तोष्पतिश्च देवताः ।
(१) प्रथमर्चः परानुष्टुप्त्रिष्टुप् (२-७) द्वितीयादिषरणाञ्चानुष्टुप् छन्दसी

ऊर्जं बिभ्रद्वसुवनिः सुमेधा अघोरेण चक्षुषा मित्रियेण ।
गृहानैमि सुमना वन्दमानो रमध्वं मा बिभीत मत् ॥१॥

इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः ।
पूर्णा वामेन तिष्ठन्तस्ते नो जानन्त्वायतः ॥२॥

येषा॑मु॒ध्येति॑ प्र॒वस॒न्येषु॑ सौमन॒सो ब॒हुः ।
गृ॒हानुप॑ ह्वयामहे॒ ते नो॑ जानन्त्वाय॒तः ॥३॥

उप॑हूता॒ भूरि॑धना॒ः सखा॑यः स्वा॒दुसं॑मुदः ।
अ॒क्षु॒ध्या अ॑तृ॒ष्या स्त॒ गृहा॒ मास्मद्बि॑भीतन ॥४॥

उप॑हूता इ॒ह गाव॒ उप॑हूता अजा॒वयः॑ ।
अथो॒ अन्न॑स्य की॒लाल॒ उप॑हूतो गृ॒हेषु॑ नः ॥५॥

सू॒नृता॑वन्तः सु॒भगा॒ इरा॑वन्तो हसामु॒दाः ।
अ॒तृ॒ष्या अ॑क्षु॒ध्या स्त॒ गृहा॒ मास्मद्बि॑भीतन ॥६॥

इ॒हैव स्त॒ मानु॑ गात॒ विश्वा॑ रू॒पाणि॑ पुष्यत ।
ऐष्या॑मि भ॒द्रेणा॑ स॒ह भूयां॑सो भवता॒ मया॑ ॥७॥

## (६३) त्रिषष्टितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः

यद॑ग्ने॒ तप॑सा॒ तप॑ उपत॒प्याम॑हे॒ तपः॑ ।
प्रि॒याः श्रु॒तस्य॑ भू॒यास्मायु॑ष्मन्तः सुमे॒धसः॑ ॥१॥

अग्ने॒ तप॑स्तप्यामह॒ उप॑ तप्यामहे॒ तपः॑ ।
श्रु॒तानि॑ शृ॒ण्वन्तो॑ व॒यमायु॑ष्मन्तः सुमे॒धसः॑ ॥२॥

## (६४) चतुःषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कश्यपो मरीचिर्ऋषिः । अग्निर्देवता । जगती छन्दः

अ॒यम॒ग्निः सत्प॑तिर्वृ॒द्धवृ॑ष्णो र॒थीव॑ प॒त्तीन॑जयत्पु॒रोहि॑तः ।
नाभा॑ पृथि॒व्यां निहि॑तो॒ दवि॑द्युतदधस्प॒दं कृ॑णु॒तां ये पृ॑त॒न्यवः॑ ॥१॥

## (६५) पञ्चषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कश्यपो मरीचिर्ऋषिः । जातवेदा देवता । जगती छन्दः

पृतनाजितं सहमानमग्निमुक्थ्यैर्हवामहे परमात्सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवोऽति दुरितान्यग्निः ॥१॥

## (६६) षट्षष्टितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य यम ऋषिः । मन्त्रोक्ता निर्ऋतिर्वा देवता । (१) प्रथमर्चो भुरिगनुष्टुप् (२) द्वितीयायाश्च न्यङ्कुसारिणी बृहती छन्दसी

इदं यत्कृष्णः शकुनिरभिनिष्पतन्नपीपतत् ।
आपो मा तस्मात्सर्वस्माद्दुरितात्पान्त्वंहसः ॥१॥

इदं यत्कृष्णः शकुनिरवामृक्षन्निर्ऋते ते मुखेन ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु ॥२॥

## (६७) सप्तषष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शुक्र ऋषिः । अपामार्गवीरुद्देवता । अनुष्टुप् छन्दः

प्रतीचीनफलो हि त्वमपामार्ग रुरोहिथ ।
सर्वान्मच्छपथाँ अधि वरीयो यवया इतः ॥१॥

यद्दुष्कृतं यच्छमलं यद्वा चेरिम पापया ।
त्वया तद्विश्वतोमुखापामार्गाप मृज्महे ॥२॥

श्यावदता कुनखिना बण्डेन यत्सहासिम ।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥३॥

## (६८) अष्टषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्राह्मणो देवता । त्रिष्टुप् छन्दः

यद्यन्तरिक्षे यदि वात आस यदि वृक्षेषु यदि वोलपेषु ।
यदश्रवन्पशव उद्यमानं तद्ब्राह्मणं पुनरस्मानुपैतु ॥१॥

## (६९) एकोनसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आत्मा देवता । पुरःपरोष्णिग्बृहती छन्दः

पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।
पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥१॥

## (७०) सप्ततितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सरस्वती देवता । (१) प्रथमर्चोऽनुष्टुप् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

सरस्वति व्रतेषु ते दिव्येषु देवि धामसु ।
जुषस्व हव्यमाहुतं प्रजां देवि ररास्व नः ॥१॥

इदं ते हव्यं घृतवत्सरस्वतीदं पितृणां हविरास्यं१ यत् ।
इमानि त उदिता शंतमानि तेभिर्वयं मधुमन्तः स्याम ॥२॥

## (७१) एकसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सरस्वती देवता । गायत्री छन्दः

शिवा नः शंतमा भव सुमृडीका सरस्वति ।
मा ते युयोम संदृशः ॥१॥

## (७२) द्विसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सुखं देवता । पथ्यापङ्क्तिश्छन्दः

शं नो वातो वातु शं नस्तपतु सूर्यः ।
अहानि शं भवन्तु नः शं रात्री प्रति धीयतां शमुषा नो व्युच्छतु ॥१॥

## (७३) त्रिसप्ततितमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ताः श्येनो वा देवता । (१) प्रथमर्चस्त्रिष्टुप् (२) द्वितीयाया अतिजगतीगर्भा जगती (३) तृतीयायाः पुरःककुम्मत्यनुष्टुप् (४-५) चतुर्थीपञ्चम्योश्चानुष्टुप् छन्दांसि

यत्किं चासौ मनसा यच्च वाचा यज्ञैर्जुहोति हविषा यजुषा ।
तन्मृत्युना निर्ऋतिः संविदाना पुरा सत्यादाहुतिं हन्त्वस्य ॥१॥

यातुधाना निर्ऋतिरादु रक्षस्ते अस्य घ्नन्त्वनृतेन सत्यम् ।
इन्द्रेषिता देवा आज्यमस्य मथ्नन्तु मा तत्सं पादि यदसौ जुहोति ॥२॥

अजिराधिराजौ श्येनौ संपातिनाविव ।
आज्यं पृतन्यतो हतां यो नः कश्चाभ्यघायति ॥३॥

अपाञ्चौ त उभौ बाहू अपि नह्याम्यास्यम् ।
अग्नेर्देवस्य मन्युना तेन तेऽवधिषं हविः ॥४॥

अपि नह्यामि ते बाहू अपि नह्याम्यास्यम् ।
अग्नेर्घोरस्य मन्युना तेनाऽवधिषं हविः ॥५॥

## (७४) चतुःसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावतः ॥१॥

## (७५) पञ्चसप्ततितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता ।
(१) प्रथमर्चोऽनुष्टुप् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम् ।
यदि श्रातं जुहोतन यद्यश्रातं ममत्तन ॥१॥

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो वि मध्यम् ।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥२॥

## (७६) षट्सप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

श्रातं मन्य ऊधनि श्रातमग्नौ सुशृतं मन्ये तदृतं नवीयः ।
माध्यन्दिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन्पुरुकृज्जुषाणः ॥१॥

## (७७) सप्तसप्ततितमं सूक्तम्

(१-११) एकादशर्चस्यास्य सूक्तस्याथर्वा ऋषिः । घर्मोऽश्विनौ, प्रत्यृचं मन्त्रोक्ता वा

देवताः । (१, ४, ६) प्रथमाचतुर्थीषष्ठीनामृचां जगती (२) द्वितीयायाः पथ्याबृहती
(३, ५, ७-११) तृतीयापञ्चम्योः सप्तम्यादिपञ्चानाञ्च त्रिष्टुप् छन्दांसि

समिद्धो अग्निर्वृषणा रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः ॥१॥

समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम् ।
दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति वेधसः ॥२॥

स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः ।
तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥३॥

यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आ गतम् ।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ॥४॥

तप्तो वां घर्मो नक्षतु स्वहोता प्र वामध्वर्युश्चरतु पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ॥५॥

उप द्रव पयसा गोधुगोषमा घर्मे सिञ्च पय उस्रियायाः ।
वि नाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो वि राजति ॥६॥

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचत् ॥७॥

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसा न्यागन् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥८॥

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्य शत्रूयतामा भरा भोजनानि ॥९॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।

सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥१०॥

सूयवसाद्भगवती हि भूया अधा वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥११॥

## (७८) अष्टसप्ततितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । मन्त्रोक्ता जातवेदा वा देवता ।
अनुष्टुप् छन्दः

अपचितां लोहिनीनां कृष्णा मातेति शुश्रुम ।
मुनेर्देवस्य मूलेन सर्वा विध्यामि ता अहम् ॥१॥

विध्याम्यासां प्रथमां विध्याम्युत मध्यमाम् ।
इदं जघन्यामासामा च्छिनद्मि स्तुकामिव ॥२॥

त्वाष्ट्रेणाहं वचसा वि त ईर्ष्याममीमदम् ।
अथो यो मन्युष्टे पते तमु ते शमयामसि ॥३॥

व्रतेन त्वं व्रतपते समक्तो विश्वाहा सुमना दीदिहीह ।
तं त्वा वयं जातवेदः समिद्धं प्रजावन्त उप सदेम सर्वे ॥४॥

## (७९) एकोनाशीतितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्योपरिबभ्रव ऋषिः । अघ्न्या देवता ।
(१) प्रथमर्चस्त्रिष्टुप् (२) द्वितीयायाश्च त्र्यवसाना भुरिक्पथ्यापङ्क्तिश्छन्दसी

प्रजावतीः सूयवसे रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा व स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु ॥१॥

पदज्ञा स्थ रमतयः संहिता विश्वनाम्नीः ।
उप मा देवीर्देवेभिरेत ।
इमं गोष्ठमिदं सदो घृतेनास्मान्त्समुक्षत ॥२॥

## (८०) अशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अपचिद्भैषज्यं देवता । (१) प्रथमर्चो विराडनुष्टुप् (२) द्वितीयायाः परोष्णिक् (३-४) तृतीयाचतुर्थ्योश्चानुष्टुप् छन्दांसि

आ सुस्रसः सुस्रसो असतीभ्यो असत्तराः ।
सेहोररसतरा लवणाद्विक्लेदीयसीः ॥१॥

या ग्रैव्या अपचितोऽथो या उपपक्ष्याः ।
विजाम्नि या अपचितः स्वयंस्रसः ॥२॥

यः कीकसाः प्रशृणाति तलीद्यमवतिष्ठति ।
निर्हास्तं सर्वं जायान्यं यः कश्च ककुदि श्रितः ॥३॥

पक्षी जायान्यः पतति स आ विशति पूरुषम् ।
तदक्षितस्य भेषजमुभयोः सुक्षतस्य च ॥४॥

## (८१) एकाशीतितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । जायान्य इन्द्रश्च देवते ।
(१) प्रथमर्चो भुरिगनुष्टुप् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

विद्म वै ते जायान्य जानं यतो जायान्य जायसे ।
कथं ह तत्र त्वं हनो यस्य कृण्मो हविर्गृहे ॥१॥

धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।
माध्यन्दिने सवन आ वृषस्व रयिष्ठानो रयिमस्मासु धेहि ॥२॥

## (८२) द्व्यशीतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याङ्गिरा ऋषिः । मरुतो देवताः ।
(१) प्रथमर्चस्त्रिपदा गायत्री (२) द्वितीयायास्त्रिष्टुप् (३) तृतीयायाश्च जगती छन्दांसि

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन ।
अस्माकोती रिशादसह ॥१॥

यो नो मर्तो मरुतो दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान्प्रति मुञ्चतां स तपिष्ठेन तपसा हन्तना तम् ॥२॥

संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषासः ।
ते अस्मत्पाशान्प्र मुञ्चन्त्वेनसः सांतपना मत्सरा मादयिष्णवः ॥३॥

(८३) त्र्यशीतितमं सूक्तम्
(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता ।
(१) प्रथमर्चः परोष्णिक् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी
वि ते मुञ्चामि रशनां वि योक्त्रं वि नियोजनम् ।
इहैव त्वमजस्र एध्यग्ने ॥१॥

अस्मै क्षत्राणि धारयन्तमग्ने युनज्मि त्वा ब्रह्मणा दैव्येन ।
दीदिह्यस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्दां देवतासु ॥२॥

(८४) चतुरशीतितमं सूक्तम्
(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अमावास्या देवता ।
(१) प्रथमर्चो जगती (२-४) द्वितीयादितृचस्य च त्रिष्टुप् छन्दसी
यत्ते देवा अकृण्वन्भागधेयममावास्ये संवसन्तो महित्वा ।
तेना नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ॥१॥

अहमेवास्म्यमावास्या३ मामा वसन्ति सुकृतो मयीमे ।
मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे ॥२॥

आगन्रात्री संगमनी वसूनामूर्जं पुष्टं वस्वावेशयन्ती ।
अमावास्यायै हविषा विधेमोर्जं दुहाना पयसा न आगन् ॥३॥

अमावास्ये न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥४॥

(८५) पञ्चाशीतितमं सूक्तम्
(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः ।
(१-२, ४) प्रथमाद्वितीयाचतुर्थीनामृचां पौर्णमासी (३) तृतीयायाश्च प्रजापतिर्देवते ।
(१, ३-४) प्रथमातृतीयाचतुर्थीनां त्रिष्टुप् (२) द्वितीयायाश्चानुष्टुप् छन्दसी

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवैः संवसन्तो महित्वा नाकस्य पृष्ठे समिषा मदेम ॥१॥

वृषभं वाजिनं वयं पौर्णमासं यजामहे ।
स नो ददात्वक्षितां रयिमनुपदस्वतीम् ॥२॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥३॥

पौर्णमासी प्रथमा यज्ञियासीदह्नां रात्रीणामतिशर्वरेषु ।
ये त्वां यज्ञैर्यज्ञिये अर्धयन्त्यमी ते नाके सुकृतः प्रविष्टाः ॥४॥

(८६) षडशीतितमं सूक्तम्
(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । सावित्री सूर्यश्चन्द्रमाश्च देवताः ।
(१-२, ६) प्रथमाद्वितीयाषष्ठीनामृचां त्रिष्टुप् (३) तृतीयाया अनुष्टुप्
(४) चतुर्थ्या आस्तारपङ्क्तिः (५) पञ्चम्याश्च सम्राडास्तारपङ्क्तिश्छन्दांसि

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोऽर्णवम् ।
विश्वान्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायसे नवः ॥१॥

नवोनवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन्प्र चन्द्रमस्तिरसे दीर्घमायुः ॥२॥

सोमस्यांशो युधां पतेऽनूनो नाम वा असि ।
अनूनं दर्श मा कृधि प्रजया च धनेन च ॥३॥

दर्शोऽसि दर्शतोऽसि समग्रोऽसि समन्तः ।

समग्रः समन्तो भूयासं गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन ॥४॥

योऽ३स्मान्द्वेष्टि यं वयं द्विष्मस्तस्य त्वं प्राणेना प्यायस्व ।
आ वयं प्याशिषीमहि गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन ॥५॥

यं देवा अंशुमाप्याययन्ति यमक्षितमक्षिता भक्षयन्ति ।
तेनास्मानिन्द्रो वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः ॥६॥

## (८७) सप्ताशीतितमं सूक्तम्

(१-६) षड्चस्यास्य सूक्तस्य शौनक ऋषिः । अग्निर्देवता ।
(१, ४-६) प्रथमर्चश्चतुर्थ्यादितृचस्य च त्रिष्टुप् (२) द्वितीयायाः ककुम्मती बृहती
(३) तृतीयायाश्च जगती छन्दांसि

अभ्यर्चत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ताम् ॥१॥

मय्यग्रे अग्निं गृह्णामि सह क्षत्रेण वर्चसा बलेन ।
मयि प्रजां मय्यायुर्दधामि स्वाहा मय्यग्निम् ॥२॥

इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचित्ता निकारिणः ।
क्षत्रेणाग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥३॥

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश ॥४॥

प्रत्यग्निरुषसामग्रमख्यत्प्रत्यहानि प्रथमो जातवेदाः ।
प्रति सूर्यस्य पुरुधा च रश्मीन्प्रति द्यावापृथिवी आ ततान ॥५॥

घृतं ते अग्ने दिव्ये सधस्थे घृतेन त्वां मनुरद्या समिन्धे ।
घृतं ते देवीर्नप्त्य१ आ वहन्तु घृतं तुभ्यं दुह्रतां गावो अग्ने ॥६॥

## (८८) अष्टाशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शुनःशेप ऋषिः । वरुणो देवता ।
(१) प्रथमर्चोऽनुष्टुप् (२) द्वितीयायाः पथ्यापङ्क्तिः (३) तृतीयायास्त्रिष्टुप्
(४) चतुर्थ्याश्च बृहतीगर्भा त्रिष्टुप् छन्दांसि

अप्सु ते राजन्वरुण गृहो हिरण्ययो मिथः ।
ततो धृतव्रतो राजा सर्वा धामानि मुञ्चतु ॥१॥

दाम्नोदाम्नो राजन्नितो वरुण मुञ्च नः ।
यदापो अघ्न्या इति वरुणेति यदूचिम ततो वरुण मुञ्च नः ॥२॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अधा वयमादित्य व्रते तवानागसो अदितये स्याम ॥३॥

प्रास्मत्पाशान्वरुण मुञ्च सर्वान्य उत्तमा अधमा वारुणा ये ।
दुष्वप्न्यं दुरितं नि ष्वास्मदथ गच्छेम सुकृतस्य लोकम् ॥४॥

## (८९) एकोननवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृगुर्ऋषिः । (१) प्रथमर्चोऽग्निः
(२-३) द्वितीयातृतीययोश्चेन्द्रो देवते । (१) प्रथमाया जगती
(२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी

अनाधृष्यो जातवेदा अमर्त्यो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वा अमीवाः प्रमुञ्चन्मानुषीभिः शिवाभिरद्य परि पाहि नो गयम् ॥१॥

इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रायन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥२॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगम्यात्परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व ॥३॥

## (९०) नवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । तार्क्ष्यो देवता । त्रिष्टुप् छन्दः

त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजिमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥

## (९१) एकनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रं स्वस्ति न इन्द्रो मघवान्कृणोतु ॥१॥

## (९२) द्विनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । रुद्रो देवता । जगती छन्दः

यो अग्नौ रुद्रो यो अप्स्व१ऽन्तर्य ओषधीर्वीरुध आविवेश ।
य इमाविश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥१॥

## (९३) त्रिनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य गरुत्मानृषिः । तक्षको देवता । त्र्यवसाना बृहती छन्दः

अपेह्यरिरस्यरिर्वा असि ।
विषे विषमपृक्था विषमिद्वा अपृक्थाः ।
अहिमेवाभ्यपेहि तं जहि ॥१॥

## (९४) चतुर्नवतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य सिन्धुद्वीप ऋषिः । अग्निर्देवता । (१, ३-४) प्रथमातृतीयाचतुर्थीनामृचामनुष्टुप् (२) द्वितीयायाश्च त्रिपदा निचृत्परोष्णिक् छन्दसी

अपो दिव्या अचायिषं रसेन समपृक्ष्महि ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥१॥

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥२॥

इदमापः प्र वहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ॥३॥

एधोऽस्येधिषीय समिदसि समेधिषीय ।
तेजोऽसि तेजो मयि धेहि ॥४॥

## (९५) पञ्चनवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता देवताः ।
(१) प्रथमर्चो गायत्री (२) द्वितीयाया विराट् पुरस्ताद्बृहती
(३) तृतीयायाश्च त्र्यवसाना षट्पदा भुरिग्जगती छन्दांसि

अपि वृश्च पुराणवद्व्रततेरिव गुष्पितम् ।
ओजो दासस्य दम्भय ॥१॥

वयं तदस्य संभृतं वस्विन्द्रेण वि भजामहै ।
म्लापयामि भ्रजः शिभ्रं वरुणस्य व्रतेन ते ॥२॥

यथा शेपो अपायातै स्त्रीषु चासदनावयाः ।
अवस्थस्य क्नदीवतः शाङ्कुरस्य नितोदिनः ।
यदाततमव तत्तनु यदुत्ततं नि तत्तनु ॥३॥

## (९६) षण्णवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । त्रिष्टुप् छन्दः

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ॥१॥

## (९७) सप्तनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । त्रिष्टुप् छन्दः

स सुत्रामा स्ववाँ इन्द्रो अस्मदाराच्चिद्द्वेषः सनुतर्युयोतु ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥१॥

## (९८) अष्टनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

इन्द्रेण मन्युना वयमभि ष्याम पृतन्यतः ।
घ्नन्तो वृत्राण्यप्रति ॥१॥

## (९९) नवनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । सोमो देवता । अनुष्टुप् छन्दः

ध्रुवं ध्रुवेण हविषाव सोमं नयामसि ।
यथा न इन्द्रः केवलीर्विशः संमनसस्करत् ॥१॥

## (१००) शततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कपिञ्जल ऋषिः । गृध्रौ देवते । (१) प्रथमर्चोऽनुष्टुप्
(२-३) द्वितीयातृतीययोश्च भुरिगनुष्टुप् छन्दसी

उदस्य श्यावौ विथुरौ गृध्रौ द्यामिव पेततुः ।
उच्छोचनप्रशोचनवस्योच्छोचनौ हृदः ॥१॥

अहमेनावुदतिष्ठिपं गावौ श्रान्तसदाविव ।
कुर्कुराविव कूजन्तावुदवन्तौ वृकाविव ॥२॥

आतोदिनौ नितोदिनावथो संतोदिनावुत ।
अपि नह्याम्यस्य मेढ्रं य इतः स्त्री पुमाञ्जभार ॥३॥

## (१०१) एकोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कपिञ्जल ऋषिः । वयो देवता । अनुष्टुप् छन्दः

असदन्गावः सदनेऽपप्तद्वसतिं वयः ।
आस्थाने पर्वता अस्थुः स्थाम्नि वृक्कावतिष्ठिपम् ॥१॥

## (१०२) द्व्युत्तरशततमं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्राग्नी देवते ।
(१-४) प्रथमादिचतसृणामृचां त्रिष्टुप् (५) पञ्चम्यास्त्रिपदार्ची भुरिग्गायत्री
(६) षष्ठ्यास्त्रिपदा प्राजापत्या बृहती (७) सप्तम्यास्त्रिपदा साम्नी भुरिग्जगती

(८) अष्टम्याश्चोपरिष्टाद्बृहती छन्दांसि

यदद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वन्नवृणीमहीह ।
ध्रुवमयो ध्रुवमुता शविष्ठ प्रविद्वान्यज्ञमुप याहि सोमम् ॥१॥

समिन्द्र नो मनसा नेष गोभिः सं सूरिभिर्हरिवन्त्सं स्वस्त्या ।
सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमतौ यज्ञियानाम् ॥२॥

यानावह उशतो देव देवांस्तान्प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवांसः पपिवांसो मधून्यस्मै धत्त वसवो वसूनि ॥३॥

सुगा वो देवाः सदना अकर्म य आजग्म सवने मा जुषाणाः ।
वहमाना भरमाणाः स्वा वसूनि वसुं घर्मं दिवमा रोहतानु ॥४॥

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ ।
स्वां योनिं गच्छ स्वाहा ॥५॥

एष ते यज्ञो यज्ञपते सहसूक्तवाकः ।
सुवीर्यः स्वाहा ॥६॥

वषड्धुतेभ्यो वषडहुतेभ्यः ।
देवा गातुविदो गातुं वित्त्वा गातुमित ॥७॥

मनसस्पत इमं नो दिवि देवेषु यज्ञम् ।
स्वाहा दिवि स्वाहा पृथिव्यां स्वाहान्तरिक्षे स्वाहा वाते धां स्वाहा ॥८॥

## (१०३) त्र्युत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । विराट्त्रिष्टुप् छन्दः

सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना सं मरुद्भिः ।
सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा ॥१॥

## (१०४) चतुरुत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । भुरिक्त्रिष्टुप् छन्दः

परि॑ स्तृणीहि॒ परि॑ धेहि॒ वेदिं॒ मा जा॒मिं मो॑षीरमु॒या शया॑नाम् ।
हो॒तृ॒षद॑नं॒ हरि॑तं हिर॒ण्ययं॒ नि॒ष्का ए॒ते यज॑मानस्य लो॒के ॥१॥

## (१०५) पञ्चोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः

प॒र्याव॑र्ते दु॒ष्वप्न्या॑त्पा॒पात्स्वप्न्या॒दभू॑त्याः ।
ब्रह्मा॒हमन्त॑रं कृण्वे॒ परा॒ स्वप्न॑मुखा॒ः शुच॑ः ॥१॥

## (१०६) षडुत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः

यत्स्वप्ने॒ अन्न॑म॒श्नामि॒ न प्रा॒तर॑धिग॒म्यते॑ ।
सर्वं॒ तद॑स्तु मे शि॒वं न॒हि तद्दृ॒ष्यते॒ दिवा॑ ॥१॥

## (१०७) सप्तोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । मन्त्रोक्ता देवताः ।
विराट् पुरस्ताद्बृहती छन्दः

न॒म॒स्कृ॒त्य॒ द्यावा॑पृथि॒वीभ्या॑म॒न्तरि॑क्षाय मृ॒त्यवे॑ ।
मे॒क्षाम्यू॒र्ध्वस्तिष्ठ॒न्मा मा॑ हिंसिषुरीश्व॒राः ॥१॥

## (१०८) अष्टोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । ब्रह्मात्मा देवता । त्रिष्टुप् छन्दः

को अ॒स्या नो॑ द्रु॒हो॒ऽव॒द्यव॑त्या॒ उन्ने॑ष्यति क्ष॒त्रियो॒ वस्य॑ इ॒च्छन् ।
को य॒ज्ञका॑म॒ः क उ॒ पूर्ति॑काम॒ः को दे॒वेषु॑ वनुते दी॒र्घमायु॑ः ॥१॥

## (१०९) नवोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । ब्रह्मात्मा देवता । त्रिष्टुप् छन्दः

कः पृश्नि॑ं धे॒नुं वरु॑णेन द॒त्तामथ॑र्वणे सु॒दुघा॑ं नित्य॑वत्साम् ।
बृह॒स्पति॑ना स॒ख्यं॑ जुषा॒णो य॑थाव॒शं त॒न्व॑ः कल्पयाति ॥१॥

## (११०) दशोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः

अपक्रामन्पौरुषेयाद्वृणानो दैव्यं वचः ।
प्रणीतीरभ्यावर्तस्व विश्वेभिः सखिभिः सह ॥१॥

## (१११) एकादशोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । पूर्वार्धस्य मन्त्रोक्ता जातवेदा वा उत्तरार्धस्य च वरुणो देवते । बृहतीगर्भा त्रिष्टुप् छन्दः

यदस्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः ।
ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः ॥१॥

## (११२) द्वादशोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सूर्य आपो वा देवताः । अनुष्टुप् छन्दः

अव दिवस्तारयन्ति सप्त सूर्यस्य रश्मयः ।
आपः समुद्रिया धारास्तास्ते शल्यमसिस्रसन् ॥१॥

## (११३) त्रयोदशोत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य भृगुर्ऋषिः । अग्निर्देवता ।
(१) प्रथमर्चो बृहतीगर्भा त्रिष्टुप् (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी

यो नस्तायद्दिप्सति यो न आविः स्वो विद्वानरणो वा नो अग्ने ।
प्रतीच्येत्वरणी दत्वती तान्मैषामग्ने वास्तु भून्मो अपत्यम् ॥१॥

यो नः सुप्ताञ्जाग्रतो वाभिदासात्तिष्ठतो वा चरतो जातवेदः ।
वैश्वानरेण सयुजा सजोषास्तान्प्रतीचो निर्दह जातवेदः ॥२॥

## (११४) चतुर्दशोत्तरशततमं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य बादरायणिर्ऋषिः । अग्निर्मन्त्रोक्ता वा देवताः ।
(१) प्रथमर्चो विराट् पुरस्ताद्बृहती (२-३, ५-६) द्वितीयातृतीयापञ्चमीषष्ठीनां त्रिष्टुप्
(४, ७) चतुर्थीसप्तम्योश्चानुष्टुप् छन्दांसि

इदमुग्राय बभ्रवे नमो यो अक्षेषु तनूवशी ।
घृतेन कलिं शिक्षामि स नो मृडातीदृशे ॥१॥

घृतमप्सराभ्यो वह त्वमग्ने पांसूनक्षेभ्यः सिकता अपश्च ।
यथाभागं हव्यदातिं जुषाणा मदन्ति देवा उभयानि हव्या ॥२॥

अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च ।
ता मे हस्तौ सं सृजन्तु घृतेन सपत्नं मे कितवं रन्धयन्तु ॥३॥

आदिनवं प्रतिदीव्ने घृतेनास्माँ अभि क्षर ।
वृक्षमिवाशन्या जहि यो अस्मान्प्रतिदीव्यति ॥४॥

यो नो द्युवे धनमिदं चकार यो अक्षाणां ग्लहनं शेषणं च ।
स नो देवो हविरिदं जुषाणो गन्धर्वेभिः सधमादं मदेम ॥५॥

संवसव इति वो नामधेयमुग्रंपश्या राष्ट्रभृतो ह्यक्षाः ।
तेभ्यो व इन्दवो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥६॥

देवान्यन्नाथितो हुवे ब्रह्मचर्यं यदूषिम ।
अक्षान्यद्बभ्रूनालभे ते नो मृडन्त्वीदृशे ॥७॥

(११५) पञ्चदशोत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृगुर्ऋषिः । इन्द्राग्नी देवते । (१) प्रथमर्चो गायत्री
(२) द्वितीयायास्त्रिष्टुप् (३) तृतीयायाश्चानुष्टुप् छन्दांसि

अग्न इन्द्रश्च दाशुषे हतो वृत्राण्यप्रति ।
उभा हि वृत्रहन्तमा ॥१॥

याभ्यामजयन्त्स्वरग्र एव यावातस्थतुर्भुवनानि विश्वा ।
प्रचर्षणीवृषणा वज्रबाहू अग्निमिन्द्रं वृत्रहणा हुवेऽहम् ॥२॥

उप त्वा देवो अग्रमीच्चमसेन बृहस्पतिः ।
इन्द्र गीर्भिर्न आ विश यजमानाय सुन्वते ॥३॥

## (११६) षोडशोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । वृषभो देवता । पराबृहती त्रिष्टुप् छन्दः

इन्द्र॑स्य कु॒क्षिर॑सि सोम॒धान॑ आ॒त्मा दे॒वाना॑मु॒त मानु॑षाणाम् ।
इ॒ह प्र॒जा ज॑नय॒ यास्त॑ आ॒सु या अ॒न्यत्रे॒ह तास्ते॑ रमन्ताम् ॥१॥

## (११७) सप्तदशोत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य वरुण ऋषिः । आपो देवताः ।
(१) प्रथमर्चो भुरिगनुष्टुप् (२) द्वितीयायाश्चानुष्टुप् छन्दसी

शुम्भ॑नी॒ द्यावा॑पृथि॒वी अन्ति॑सुम्ने॒ महि॑व्रते ।
आप॑ः स॒प्त सु॑स्रुवु॒र्दे॒वीस्ता नो॑ मुञ्च॒न्त्वंह॑सः ॥१॥

मु॒ञ्चन्तु॑ मा शप॒थ्या॒३॒॑दथो॑ वरु॒ण्या॒॑दु॒त ।
अथो॑ य॒मस्य॒ पड्वी॑शा॒द्विश्व॑स्माद्देवकिल्बि॒षात् ॥२॥

## (११८) अष्टादशोत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य भार्गव ऋषिः । तृष्टिका देवता । (१) प्रथमर्चो विराडनुष्टुप् (२) द्वितीयायाश्च शङ्कुमती चतुष्पदा भुरिगुष्णिक् छन्दसी

तृष्टि॑के॒ तृष्ट॑वन्दन॒ उद॒मूं छि॑न्धि तृष्टिके ।
यथा॑ कृ॒तद्वि॒ष्टासो॒ऽमुष्मै॑ शे॒प्याव॑ते ॥१॥

तृ॒ष्टासि॑ तृष्टि॒का वि॒षा वि॑षात॒क्य॒॑सि ।
परि॑वृक्ता॒ यथास॑स्यृष॒भस्य॑ व॒शेव॑ ॥२॥

## (११९) एकोनविंशत्युत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य भार्गव ऋषिः । अग्नीषोमौ देवते । अनुष्टुप् छन्दः

आ ते॑ ददे व॒क्षणा॑भ्य॒ आ ते॒ऽहं हृद॑याद्ददे ।
आ ते॒ मुख॑स्य॒ सङ्का॑शा॒त्सर्वं॑ ते॒ वर्च॒ आ द॑दे ॥१॥

प्रेतो य॑न्तु॒ व्या॒॑ध्य॒ः प्रानु॒ध्याः प्रो अश॑स्तयः ।
अ॒ग्नी र॑क्ष॒स्विनी॑र्हन्तु॒ सोमो॑ हन्तु दुरस्य॒तीः ॥२॥

## (१२०) विंशत्युत्तरशततमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । सविता जातवेदाश्च देवते ।
(१, ४) प्रथमाचतुर्थ्योर्ऋचोरनुष्टुप् (२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी

प्र पतेतः पापि लक्ष्मि नश्येतः प्रामुतः पत ।
अयस्मयेनाङ्केन द्विषते त्वा सजामसि ॥१॥

या मा लक्ष्मीः पतयालूरजुष्टाभिचस्कन्द वन्दनेव वृक्षम् ।
अन्यत्रास्मत्सवितस्तामितो धा हिरण्यहस्तो वसु नो रराणः ॥२॥

एकशतं लक्ष्म्यो३ मर्त्यस्य साकं तन्वा जनुषोऽधि जाताः ।
तासां पापिष्ठा निरितः प्र हिण्मः शिवा अस्मभ्यं जातवेदो नियच्छ ॥३॥

एता एना व्याकरं खिले गा विष्ठिता इव ।
रमन्तां पुण्या लक्ष्मीर्याः पापीस्ता अनीनशम् ॥४॥

## (१२१) एकविंशत्युत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । चन्द्रमा देवता ।
(१) प्रथमर्चः परोष्णिक् (२) द्वितीयायाश्चैकावसाना द्विपदार्च्यनुष्टुप् छन्दसी

नमो रूराय च्यवनाय नोदनाय धृष्णवे ।
नमः शीताय पूर्वकामकृत्वने ॥१॥

यो अन्येद्युरुभयद्युरभ्येतीमं मण्डूकमभ्येत्वव्रतः ॥२॥

## (१२२) द्वाविंशत्युत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । इन्द्रो देवता । पथ्याबृहती छन्दः

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिद्वि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि ॥१॥

## (१२३) त्रयोविंशत्युत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । मन्त्रोक्ता चन्द्रमा वा देवता ।
त्रिष्टुप् छन्दः

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥१॥

इति सप्तमं काण्डम्

# अष्टमं काण्डम्

## (१) प्रथमं सूक्तम्

(१-२१) एकविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता । (१) प्रथमर्चः पुरोबृहती त्रिष्टुप् (२-३, १७-२१) द्वितीयातृतीययोः सप्तदश्यादिपञ्चानाञ्चानुष्टुप् (४, ९, १५-१६) चतुर्थीनवमीपञ्चदशीषोडशीनां प्रस्तारपङ्क्तिः (५-६, १०-११) पञ्चमीषष्ठीदशम्येकादशीनां त्रिष्टुप् (७) सप्तम्यास्त्रिपदा विराड्गायत्री (८) अष्टम्या विराट्पथ्याबृहती (१२) द्वादश्यास्त्र्यवसाना पञ्चपदा जगती (१३) त्रयोदश्यास्त्रिपदा भुरिग्महाबृहती (१४) चतुर्दश्याश्चैकावसाना द्विपदा साम्नी भुरिग्बृहती छन्दांसि

अन्तकाय मृत्यवे नमः प्राणा अपाना इह ते रमन्ताम् ।
इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ॥१॥

उदेनं भगो अग्रभीदुदेनं सोमो अंशुमान् ।
उदेनं मरुतो देवा उदिन्द्राग्नी स्वस्तये ॥२॥

इह तेऽसुरिह प्राण इहायुरिह ते मनः ।
उत्त्वा निर्ऋत्याः पाशेभ्यो दैव्या वाचा भरामसि ॥३॥

उत्क्रामातः पुरुष माव पत्था मृत्योः पड्बीषमवमुञ्चमानः ।
मा च्छित्था अस्माल्लोकादग्नेः सूर्यस्य संदृशः ॥४॥

तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षन्त्वमृतान्यापः ।
सूर्यस्ते तन्वे३ शं तपाति त्वां मृत्युर्दयतां मा प्र मेष्ठाः ॥५॥

उद्यानं ते पुरुष नावयानं जीवातुं ते दक्षतातिं कृणोमि ।
आ हि रोहेमममृतं सुखं रथमथ जिर्विर्विदथमा वदासि ॥६॥

मा ते मनस्तत्र गान्मा तिरो भून्मा जीवेभ्यः प्र मदो मानु गाः पितॄन् ।
विश्वे देवा अभि रक्षन्तु त्वेह ॥७॥

मा गतानामा दीधीथा ये नयन्ति परावतम् ।

आ रौह तमसो ज्योतिरेह्या ते हस्तौ रभामहे ॥८॥

श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरक्षी श्वानौ ।
अर्वाङेहि मा वि दीध्यो मात्र तिष्ठः पराङ्मनाः ॥९॥

मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि ।
तम एतत्पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक् ॥१०॥

रक्षन्तु त्वाग्नयो ये अप्स्व१न्ता रक्षतु त्वा मनुष्या३ यमिन्धते ।
वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्र धाग्विद्युता सह ॥११॥

मा त्वा क्रव्यादभि मंस्तारात्संकसुकाच्चर
रक्षतु त्वा द्यौ रक्षतु पृथिवी सूर्यश्च त्वा रक्षतां चन्द्रमाश्च ।
अन्तरिक्षं रक्षतु देवहेत्याः ॥१२॥

बोधश्च त्वा प्रतिबोधश्च रक्षतामस्वप्नश्च त्वानवद्राणश्च रक्षताम् ।
गोपायंश्च त्वा जागृविश्च रक्षताम् ॥१३॥

ते त्वा रक्षन्तु ते त्वा गोपायन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥१४॥

जीवेभ्यस्त्वा समुदे वायुरिन्द्रो धाता दधातु सविता त्रायमाणः ।
मा त्वा प्राणो बलं हासीदसुं तेऽनु ह्वयामसि ॥१५॥

मा त्वा जम्भः संहनुर्मा तमो विदन्मा जिह्वा बर्हिः प्रमयुः कथा स्याः ।
उत्त्वादित्या वसवो भरन्तूदिन्द्राग्नी स्वस्तये ॥१६॥

उत्त्वा द्यौरुत्पृथिव्युत्प्रजापतिरग्रभीत् ।
उत्त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन् ॥१७॥

अयं देवा इहैवास्त्वयं मामुत्र गादितः ।

इमं सहस्रवीर्येण मृत्योरुत्पारयामसि ॥१८॥

उत्त्वा मृत्योरपीपरं सं धमन्तु वयोधसः ।
मा त्वा व्यस्तकेश्यो मा त्वाघरुदो रुदन् ॥१९॥

आहार्षमविदं त्वा पुनरागाः पुनर्णवः ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥२०॥

व्यवात्ते ज्योतिरभूदप त्वत्तमो अक्रमीत् ।
अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं नि दध्मसि ॥२१॥

## (२) द्वितीयं सूक्तम्

(१-२८) अष्टाविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता ।
(१-२, ७) प्रथमाद्वितीययोर्ऋचोः सप्तम्याश्च भुरिक्त्रिष्टुप्
(३, २६) तृतीयाषड्विंश्योरास्तारपङ्क्तिः (४) चतुर्थ्याः प्रस्तारपङ्क्तिः
(५, १०, १६, १८, २०, २३-२५, २७) पञ्चमीदशमीषोडश्यष्टादशीविंशीनां
त्रयोविंश्यादितृचस्य सप्तविंश्याश्चानुष्टुप् (६, १५) षष्ठीपञ्चदश्योः पथ्यापङ्क्तिः
(८) अष्टम्याः पुरस्ताज्ज्योतिष्मती जगती
(९) नवम्याः पञ्चपदा जगती (११) एकादश्या विष्टारपङ्क्तिः
(१२, २२, २८) द्वादशीद्वाविंश्यष्टाविंशीनां पुरस्ताद्बृहती (१३) त्रयोदश्यास्त्रिष्टुप्
(१४) चतुर्दश्यास्त्र्यवसाना षट्पदा जगती (१७) सप्तदश्यास्त्रिपदानुष्टुप्
(१९) एकोनविंश्या उपरिष्टाद्बृहती (२१) एकविंश्याश्च सतःपङ्क्तिश्छन्दांसि

आ रभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते ।
असुं त आयुः पुनरा भरामि रजस्तमो मोप गा मा प्र मेष्ठाः ॥१॥

जीवतां ज्योतिरभ्येह्यर्वाङा त्वा हरामि शतशारदाय ।
अवमुञ्चन्मृत्युपाशानशस्तिं द्राघीय आयुः प्रतरं ते दधामि ॥२॥

वातात्ते प्राणमविदं सूर्याच्चक्षुरहं तव ।
यत्ते मनस्त्वयि तद्धारयामि सं वित्स्वाङ्गैर्वद जिह्वयालपन् ॥३॥

प्राणेन त्वा द्विपदां चतुष्पदामग्निमिव जातमभि सं धमामि ।
नमस्ते मृत्यो चक्षुषे नमः प्राणाय तेऽकरम् ॥४॥

अयं जीवतु मा मृतेमं समीरयामसि ।
कृणोम्यस्मै भेषजं मृत्यो मा पुरुषं वधीः ॥५॥

जीवलां नघारिषां जीवन्तीमोषधीमहम् ।
त्रायमाणां सहमानां सहस्वतीमिह हुवेऽस्मा अरिष्टतातये ॥६॥

अधि ब्रूहि मा रभथाः सृजेमं तवैव सन्त्सर्वहाया इहास्तु ।
भवाशर्वौ मृडतं शर्म यच्छतमपसिध्य दुरितं धत्तमायुः ॥७॥

अस्मै मृत्यो अधि ब्रूहीमं दयस्वोदितोऽ३ऽयमेतु ।
अरिष्टः सर्वाङ्गः सुश्रुज्जरसा शतहायन आत्मना भुजमश्नुताम् ॥८॥

देवानां हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत्त्वा मृत्योरपीपरम् ।
आरादग्निं क्रव्यादं निरूहं जीवातवे ते परिधिं दधामि ॥९॥

यत्ते नियानं रजसं मृत्यो अनवधर्ष्य म् ।
पथ इमं तस्माद्रक्षन्तो ब्रह्मास्मै वर्म कृणमसि ॥१०॥

कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति ।
वैवस्वतेन प्रहितान्यमदूतांश्चरतोऽप सेधामि सर्वान् ॥११॥

आरादरातिं निरृतिं परो ग्राहिं क्रव्यादः पिशाचान् ।
रक्षो यत्सर्वं दुर्भूतं तत्तम इवाप हन्मसि ॥१२॥

अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदसः ।
यथा न रिष्या अमृतः सजूरसस्तत्ते कृणोमि तदु ते समृध्यताम् ॥१३॥

